घटवृत्तित्वव्यापकीभूतस्य पटवृत्तित्वस्याभाववदित्येवं तत्र बोधः ।
परे तु ह्रदो यदि धूमवान् स्यात् वह्निमान् स्यादित्यादौ तु प्रथमस्य
व्याप्यत्वस्यापादकत्वं द्वितीयस्य चापत्तिरर्थः तेन धूमवत्त्वापादक-
तावह्निमत्तापत्तिविशेष्यो ह्रद इत्याकारकस्तत्र बोधः । यदिशब्दस्तु
तादृशार्थतात्पर्य्यग्राहकः । यद्ययं धूमवान् वह्निमानपि स्यादित्यादौ
तु यदिशब्दस्यैवापादकत्वमर्थः इत्याहुः । यो ब्राह्मणमवगुरेत् तं
शतेन यातयादित्यादौ च हेतुहेतुमतोर्लिङ् इत्यनुशासनात् यः अव-
गुरणहेतुब्राह्मणावगोरणवान् तदीयशतयातनं ब्राह्मणावगोरणजन्यं
इत्याकारको बोधः ब्राह्मणावगोरणं ह्यनुद्यमः पौर्व्वापर्य्यमात्रं तत्र
लिङर्थः न हेतुहेतुमद्भावः पश्चात्तस्य कल्पनात् अन्यथा दुरिता-
पूर्व्वस्य वाच्यतापत्तेरिति तु प्राभाकराः । यन्नाम्ना पातयेत् पिण्डं तं
नयेद्ब्रह्म शाश्वतमित्यादावप्युक्तरीत्याऽन्वयः ।

ऋतौ स्वदारानुपेयादित्यादौ च श्रुतौ न स्वदारगमनादे-
रिष्टसाधनत्वे विधेस्तात्पर्य्यं दारगमनादेर्लौकिकप्रमाणावगतेष्ट-
साधनताकत्वेन विधेयत्वात् प्रमाणान्तराप्राप्तप्रापकस्यैव श्रौतविधित्वात्
किन्त्वयोगव्यवच्छेदपर्य्यवसिते नियमे तत्र प्रत्यवायजनकीभूताभाव
प्रतियोगित्वरूप लिङेकदेशस्याभावे ऋत्वादिकालस्य वच्छेदकत्वेनान्व-
यात् ऋतुकालावच्छेद्यत्वविशिष्टस्य प्रत्यवायजनकीभूताभावस्य प्रति
योगि स्वदारगमनमित्याकारकस्तत्र बोधः । यद्वा प्रत्यवायहेतुत्व
मभावश्च द्वयं तत्र लिङर्थस्तेन प्रतियोगिविधया धात्वर्थस्यावच्छेद्य
त्वेन च कालस्याभावेऽन्वयभावे लिङा प्रत्यवायहेतुत्वस्य बोधनात् ऋतु
कालावच्छेद्यः स्वदारगमनाभावः प्रत्यवायहेतुरित्याकारएव तत्र
बोधः । नच येषां दाराणां गमनमलीकं तेषामृतावगमने प्रत्य
वायो न स्यात् उक्तबाधादस्याभावादिति वाच्यं स्वदारपदस्य स्वदार
भिन्नायः स्वसमानकालीन स्वदारत्वीयपरतया उक्तस्थलेऽपि तत्र स्वदार

त्वतुल्यकालीनत्वं तस्य स्वदारभिन्नस्त्रीसमानकालीनत्वेनगमनाभावस्य प्रत्यवायहेतुत्वबोधनात् स्वासमानकालीनस्त्रीगमनस्य ताद्दशगमनत्वस्य सुप्रसिद्धत्वात् एतेन श्राद्धदिने पितृशेषं भुञ्जीतेत्यादिकोऽपि नियमविधिर्व्याख्यातः। यत्र पञ्चनखान् भुञ्जीतेत्यादिलिङोऽपि नेष्टसाधनत्वे तात्पर्य्यं भोजनस्य रागप्राप्तत्वेनाविधेयत्वात् नापि प्रागुक्तनियमे पञ्चनखानामपञ्चानामभोजनस्य प्रत्यवायहेतुत्वे मानाभावात् ऋतावुपेयात् स्वां भार्य्यामन्यथा भ्रूणहा भवेदित्यादिनिन्दार्थवादबलात् अतो स्वदारगमनाद्यभावस्य दुरितहेतुत्वव्यवस्थितेरेव तद्विधेर्नियमपरत्वकल्पनात् किन्त्वन्ययोगव्यवच्छेदपर्य्यवसन्नायां परिसंख्यायां सा च यद्यपि न शशादिपञ्चविधान् पञ्चनखानेव भुञ्जीतेत्याकारापञ्चनखभिन्नस्य ओदनादेर्भोजनस्य निषिद्धत्वे प्रमाणाभावात्तथापि पञ्चैव पञ्चनखान् भुञ्जीतेत्याकारा तेन शशादिपञ्चभिन्नानां पञ्चनखानां भोजनं प्रत्यवायहेतुरित्येवमत्र वाक्यार्थ इति तत्रत्यलिङा प्रत्यवायहेतुत्वमात्रं प्रत्याय्यते प्राथमिकपञ्चपदस्य लक्षणया शशादिपञ्चभिन्नार्थकत्वात्। ननूक्तलिङः परिसंख्यया पञ्चविधान्यपञ्चनखानां भोजनस्य प्रत्यवायहेतुत्वबोधने पञ्चपदस्य लक्षणापत्तिरतः शशादिपञ्चपञ्चनखानां भोजनाभावस्यैव प्रत्यवायहेतुत्वं बोधयन्नियमविधिरेवायमुचितः भोजनतदभावयोरेकस्यापि प्रमाणान्तरेण प्रत्यवायहेतुत्वस्याकृप्तत्वादिति चेन्न प्रोक्तविधेर्नियमपरत्वे पञ्चनखपदस्य यथेतान् एतेन शशादिपञ्च भुञ्जीत इत्यतएव पञ्चभोजनाभावस्य प्रत्यवायहेतुत्वस्यावगतेः सम्भवात्। श्वाविधं शल्लकं गोधां खड्गकूर्म्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रां श्चैकतोदतः इतिमनुवचने पञ्चनखेष्विति निर्द्धारणसप्तम्या शल्लकादिपञ्चभिन्नपञ्चनखानां भक्षणस्य प्रत्यवायहेतुताया: लाभात्वाच श्वाविधमित्यस्य शल्लकविशेषणत्वात् एवञ्च वाज-

पदार्थानामन्वयमेकमेव नियतं ज्ञानत्वं बोध्यते तदभेदान्वयात्, अ-
न्यथा पक्ता पक्ष्यतीत्यत्र निराकाङ्क्षतापत्तेः ॥०

लुङं लक्षयति।

हन्तेः कृतवधेरर्थे यातीतत्वस्य बोधिका।
सिजन्तस्याथवा धातोस्तादृशी तिङ् लुङोच्यते।

कृतवधादेशस्य हन्तेरर्थे, किम्वा सिजन्तस्य धातोरर्थे यातीत-
त्वस्य बोधिका तादृशी तिङ् लुङा लुङ्शब्देनोच्यते। अथात
हन्तिस्म इत्यादौ लिङ्लङादिको हन्तेरर्थेऽतीतत्वस्य बोधकोऽपि न
कृतवधादेशस्य नवा सिजन्तस्य अवधीत् अवधिष्टां अवधिषुरित्यादौ
तु लुङ् मात्रं तथा वध्यात् वध्यास्तां वध्यासुरित्यादौ कृतवधादेशस्य
तस्यार्थे स्वार्थानुभाविकापि आशीर्नातीतत्वस्य बोधिका। अथाप्यनु-
मततत्वस्यातनत्वाद्यनाकाङ्क्षितत्वेन विशेषणात् पच्यतां अपचत् अपचता-
मित्यादौ नोऽव्यतिप्रसङ्गः अपाक्षीदित्यादौ अतीतः कालश्च
तन्निष्ठमद्यतनत्वमपि लुङामर्थस्तेन वर्त्तमानध्वंसप्रतियोग्यद्यतनपाक-
कृतिमान् इत्येवं तत्र बोधः। रीतिरत्रैव।

लिटं लक्षयति।

दिवसाभिन्नधात्वर्थे स्वार्थस्यान्वयबोधने।
या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते।

अभिश्रियत् अदुद्रुवदित्यादौ दिवसस्यैव अपाक्षीदित्यादौ तद-
न्यस्यापि धातोरर्थे स्वार्थान्वयं लुङादयो बोधयन्ति लिटस्तु जघान
जघ्नतुरित्यादौ दिवसस्यैव धातोरर्थे पिपक्षति पापच्यते इत्यादौ
सनादयस्तादृशा अपि न तिङः तथापि प्रत्ययार्थे वर्त्तमानत्वाद्यना-
काङ्क्षत्वेन विशेषणात् पचे पचावहे पचामहे इत्यादौ न वाऽतिप्रसङ्गः।
कारयाञ्चकार बोधयाञ्चकार ईक्षाम्बभूव इत्यादावामन्त्र कृञादेर-
नुप्रयुक्तस्य पदसाधुतामात्रत्वादसम्भवापत्तेरन्यथा निर्वाहः।

विवक्षस्य यन्धेरर्थे भक्षासेरान्युतस्य वा ।
या स्वार्थसम्बन्धे हेतुः सा वा लिट् कथ्यते बुधैः

गुहोतीत्यादौ विवक्षस्य धातोरर्थे स्वार्थबोधकोऽपि लडादि र्न यन्धेरर्थे । चकासीत्यादौ चकासधातोरर्थे तादृगपि नामन्तस्य मनश्चचार सुरभिभागश्चाजगामेत्यादावतीतः काल इव धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः तच्चातीन्द्रियत्वं तेनातीतकालकत्यतीन्द्रिय चलनवन्मन इत्याकारकस्तत्र बोधः । चैत्रश्चाह पपाचेत्यादौ तु विक्लृप्ताप्यस्यापि परोक्षत्वस्य न पाकादावन्वयोऽयोग्यत्वात् । एतेन चातेने किरणावलीमुदयन इत्यादि व्याख्यातम् शेषं पूर्व्ववत् ।

लुटं आशीर्लिङञ्च क्रमेण लक्षयति ।

धात्वर्थे स्खलनत्वस्य बोधिका तिङ् लुङुच्यते ।
आशीर्लिङाशंसनस्य भावित्वस्य च बोधिका ।

श्वः पक्ष्यतीत्यादौ धात्वर्थे स्खलनत्वस्य बोधकमपि श्वःपदं न तिङ् लडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति न स्खलनत्वमपि जीवतुभवानित्यादौ तु तुबादिकं आशंसनीयत्वस्य बोधकमपि न भावित्वस्य भावित्वस्य बोधकोऽपि लडादि र्नाशंसनीयत्वस्य भूयात् भूयास्तामित्यादौ पुनरस्मादेवाशीर्लिङः प्रकृत्यर्थस्याशंसां भावित्वञ्चानुभावयन्ति । अथ पाकगोचरैककृतिदशायामपि तद्व्यापारा परकृतेरतीतत्वाद्भविष्यत्वाच्च तदानीमयं पपाच पक्ष्यतीत्यादिप्रयोग प्रसङ्गः पाककृतित्वावच्छेदेनातीतत्वादेरन्वयोपगमेन तदानीं तु पपाच पक्ष्यतीत्यादेरयोग्यत्वापत्तिः एतदवच्छेदेनातीतत्वभविष्यत्वयो- र्बाधादिति चेत् न पाककृतित्वावच्छिन्नधर्म्मिकायां तत्तत्पाकगोचर कृतित्वावच्छेद्यस्वरूपसम्बन्धेनैवातीतत्वाद्यन्वयबुद्धौ पाकार्थकधातूत्तर लिटत्वादिना हेतुतयैव उक्तदोषव्युदासात् तण्डुलास्यारोपणादिकं हि न प्रत्येकं पाकपदार्थः किन्तु स्थाल्यारोपणाभिनिवेशनतुषप्रक्षेपा-

द्यनुप्रस्फोटनपर्य्यन्त सन्ततक्रियाकलाप एव । यदाह दुर्गः क्रियते इति क्रिया साच पूर्व्वापरीभूतावयवैवेति तथाच तावत्क्रियाकला-पस्य प्रत्येकगोचरकृतेरतीतत्वभविष्यत्वयोर्बाधात् अवान्तरतुषप्रक्षे-पादिदशायां पपाच पक्ष्यतीत्यादिको न प्रयोगः । नचैवं सूपपाकं निष्पाद्य तण्डुलं पचत्यपि पुंसि अयं पपाच इति स्यात् निष्पन्नपाक-गोचरयावत्कृतेरतीतत्वात् इति वाच्यमिष्टत्वात् तण्डुलं पपाचेत्यादि प्रयोगस्यैव तत्रायोग्यत्वात् अन्यथा सूपमपाक्षीदित्यादिप्रयोग एव कथं स्यात् । अतएव सम्प्रति सूपं पचत्यपि पुरुषे सूपकर्म्मकनिष्पन्न पाकगोचरकृतित्वावच्छेदेनातीतत्वमुपादाय सूपमपाक्षीदित्यादिकः प्रयोगो भवत्येव परन्त्वद्य सूपमपाक्षीदित्यादिरेव न तत्र प्रयोगः सूपकर्म्मकाद्यतनपाकगोचरकृतित्वावच्छेदेन अतीतत्वस्य बाधादिति युक्तमुत्पश्यामः ।

लृटं लृङञ्च लक्षयति।

क्रियातिपाते कालस्य भाविनः प्रागभस्य च ।

वैशिष्ट्यबोधिका या तिङ् लृट् च लृङ् च क्रमादिमे ।

या तिङ् क्रियाया धात्वर्थस्यातिपाते विगमे भाविकालावच्छेद्य-त्वस्य बोधिका तादृशी लृट् यात्वतीतकालावच्छेद्यत्वस्य तादृशी लृङ् तण्डुलश्चेत् प्राप्स्यत्योदनमपि पक्ष्यति चैत्र इत्यादौ स्यतिप्रभृतयश्चे-त्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्याद्यभाववत्त्वमनुभावयन्ति तथैव चेदप्राप्स्यत् ओदनमप्यपक्ष्यत् इत्यादावतीतकालावच्छेद्यमिन्धनप्राप्त्य भाववत्त्वं तथाच भाव्यतीतकालाविव क्रियाप्रतियोगिकोऽभावोऽपि तयोरर्थः वक्तृतोभाव्यादिकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओ-दनपाकाद्यभावएव उक्तस्थले लृङादिना चैत्रादावनुभाव्यः क्रिया-विरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातत्वात् अतएव चैत्र चेदपतिष्यत् ग्राममप्यगमिष्यदित्यादिको न प्रयोगः तीर्थंचेद-

गमिष्यत् साधमपचत्पक्ष्यतइत्यादिकन्तु चिन्त्यः सार्थवाभावभावस्य तीर्थंगत्याद्यभावाप्रयुक्तत्वात् इति यद्युच्येत् पचेदोदनमपि भुञ्जीते-त्यादौ तु क्रियातिपत्तस्य वर्त्तमानत्वमेव विवक्षा प्रत्याय्यते न तु भावि-त्वमतीतत्वं वेति तद्युदासः ।

क्रमप्राप्तं धात्वंशप्रत्ययं लक्षयति ।

सुबर्थानन्वितस्वार्थतिङन्यप्रत्ययस्तु यः ।
स धात्वंशोऽथवा धातोरन्तांशप्रत्ययस्तथा ।

सुबर्थानन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः स तादृशार्थे धात्वंशप्रत्ययः पुत्रीयतीत्यादौ क्यजाद्यर्थस्य इच्छादेर्न सुबर्थेऽन्वयः किन्तु तिङर्थे पचतीत्यादौ सुबर्थानन्वितस्वार्थकोऽपि तिबादिर्न तिङन्यः पिपक्षया कुरुतेत्यादौ तु भावक्तान्यस्य इच्छास्वरूपस्येव सुबर्थकरणत्वादावन्वयः न तु सनन्तार्थपाकेच्छामात्रस्य सन्तु वा सान्वयसंज्ञानुरोधेन धात्वन्तावयवरूपस्य प्रत्ययैः धात्वंशप्रत्ययः पिपक्षादिधात्वन्तभागत्वात् सनादिप्रत्ययस्य ।

विभजते ।

नामप्रकृतिकश्चायं धातुप्रकृतिकस्तथा ।
तत्रादिमः क्यच्क्यङादिरपरः सन्यङादिकः ।

अयं धात्वंशप्रत्ययो नामप्रकृतिको धातुप्रकृतिकश्चेति द्वि-विधः । तत्रादिमो नामप्रकृतिकः क्यच्क्यङादिः अपरो धातुप्रकृ-तिकः सन्यङादिः यथा पुत्रीयति इत्यत्र क्यजर्थेच्छायां तत्प्रकृ-त्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादे-स्तस्याश्च तिङर्थाश्रयत्वे निरूपकत्वेनान्वये साकाङ्क्षत्वात् पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयत्ववांश्चैत्र इत्येवमन्वयधीः अतएव मनुष्यत्वादि प्रकारेण पुत्रेच्छादशायां पुत्रीयतीत्यादिको न प्रयोगः किन्तु मानु-षीयतीत्यादिरेव । अतएवात्मनः पुत्रीयतीत्यादेरात्मपुत्रत्वप्रका-

इच्छायां बोधनस्यासामर्थ्यम् । आत्मपुत्रत्वादेश्च प्रकृत्यर्थतावच-
च्छेदकत्वात् आत्मसम्बन्धी यः पुत्रः पुत्रत्वेन तद्गोचरेच्छाया बोधने
तु तस्य सामर्थ्यमेव चैत्रस्य गुरुकुलमित्यादाविव इत्यस्मच्छब्दे वक्ष्ये-
ऽपि पुत्रादावात्मप्रभृतेः प्रतियोगिविधयान्वयस्य व्युत्पन्नत्वात् । आत्म-
पुत्रीयतीत्यादौ पुनरात्मपुत्रत्वादेरपि प्रकृत्यर्थतावच्छेदकत्वात् तदव-
च्छिन्नपुत्रविषयताकेच्छाबोधने न किमपि बाधकं पश्यामः । एतेन
पुत्रकाम्यतीदंकाम्यतीत्यादौ काम्यस्याप्ययमर्थो व्याख्यातः । पुत्रीयति
माणवकमित्यादौ तु आचारसदृशाचारः क्यजर्थत्वविशेषणीभूते
आचारे प्रकृत्यर्थस्य विशेष्यीभूते च माणवकादेः कर्म्मत्वेनान्वयः तेन
पुत्रकर्म्मकाचरणसदृशं यन्माणवककर्म्मकाचरणं तदनुकूलकृतिमानि-
त्याकारकश्च बोधः । पुत्रकर्म्मकाचरणञ्च ग्रासपानादिना संवर्द्धन-
तोषणादि । सर्पीयति प्रभुमित्यादौ सर्पकर्म्मकाचरणतुल्यं यत्प्रभु-
कर्म्मकाचरणं तदनुकूलकृतिमानित्यर्थः सर्पकर्म्मकाचरणञ्च सर्प-
कर्म्मकताड़नमारणादि ग्राह्यम् । प्रासादे कुटीयतीत्यस्य कुट्यधि-
करणकाचारसदृशो यः प्रासादाधिकरणकाचारस्तदनुकूलकृतिमानि
त्यर्थः कुट्यधिकरणकाचारश्च कुट्यधिकरणकशयनादिरूपो द्रष्टव्यः ।
कर्म्माधिकरणयोरेव सदृशाचारे क्यचो विधानात् वज्रिकयेवाचरति
धूलिर्दण्डेनेवाचरति चक्रेणेत्याद्यर्थे धूलिर्व्वज्रिकीयति चक्रेण दण्डी
यतीत्यादिकः कर्त्तृकरणादेः सदृशाचारे क्यच्प्रयोगः । मान्ताव्य-
येभ्यो न स्यादित्युपदिष्टेरिदमिच्छति स्वरिच्छति इत्याद्यर्थे इदमिवा-
चरतीत्याद्यर्थे च न क्यच् । गव्यति नाव्यतीत्यादावपि गामिच्छति
गामिवाचरति इत्यादिरर्थः । ओदौद्भ्यां क्यचः स्वरवद्भावादवाद्यादेशः
नमस्तपोवरिवसां कर्त्तृत्वेऽपि क्यचो विधानात् नमस्यति देवानित्यस्य
देवनतिं तपस्यति प्रभुमित्यस्य प्रभुसन्तापं वरिवस्यति गुरूनित्यस्य च
गुरूणां परिचर्य्यां करोतीत्यर्थः । श्येनायते काकइत्यादौ काकोऽपि

काकारसदृशाकारोऽर्थः तत्र च प्रकृत्यर्थस्य श्येनादेः कर्त्तृत्वेनैव काकाद्यन्वयात् श्येनकर्त्तृकाकारसदृशाकारवान् काक इत्येवं तत्र बोधः। श्येनकर्त्तृकाकारश्च मांसहरणादिर्ग्राह्यः। श्येनी इवाचरतीत्यर्थे श्येनायते काकीत्यत्र भाषितपुंस्कत्वात् क्यङि पुंवद्भावः गार्ग्यमिवाचरतीत्याद्यर्थे गार्गीयतीत्यत्र क्यचीव गार्ग्य इवाचरतीत्याद्यर्थे गार्गायते इत्यत्र क्यङ्यप्यपत्यप्रत्ययस्य लोपः। तथा वाजीयतीत्यादौ नस्य। ओजायते अप्सरायते पयायते पयस्यते गर्द्दभति अश्वतीत्यादावप्युक्तरीत्यैवान्वयः ओजसप्सरसोर्नित्यं पयसः सोविभाषया। क्यचो ऽपि लोपोऽस्त्वोगर्द्दभत्यश्वतीत्यत इतिवचनादेषु सादेर्लोपः अत्रौजः-पदस्यौजस्विपरत्वमिति निबन्धारः। गव्यते नाव्यते इत्यादेरपि गौरिवाचरतीत्यादिरर्थः पूर्व्ववदवादेशः पूर्व्वमनुन्मना उन्मनोवदाचरति इत्यर्थेऽप्युन्मनायते दुर्म्मनायते अवेहत् वेहदिवाचरतीत्यर्थे वेहायतीत्यादौ तस्य लुक्। गौर्गर्भघातिनी वेहत्। अलोहितो लोहितोभवतीत्यर्थे लोहितायति लोहितायते स्वरितत्वादुभयपदं सुखमनुभवति इत्यर्थे सुखायते एवं दुःखायते अलीकायतेइत्यादि। शब्दं करोतीत्यर्थे शब्दायते एवं वैरायते कलहायते। गिलितस्य पुनश्चर्व्वणं रोमन्थः तं करोतीत्यर्थे रोमन्थायते गौः। मुण्डादेस्तत् करोत्यर्थे गृह्णात्यर्थे कृतादितः। वक्तीत्यर्थे च सत्यादेरङ्गभ्यस्त निरस्यतीति भागुरिस्मृतेः नरं मुण्डयतीत्यत्र नरनिष्ठमुण्डनं अन्नं मिश्रयतीत्यत्र अन्ननिष्ठमिश्रत्वं वासः श्लथयतीत्यत्र वासोनिष्ठ श्लथित्वम् अन्नं मधुरयति इत्यत्र चान्ननिष्ठमाधुर्य्यं चैत्रं मित्रयतीत्यत्र चैत्रनिष्ठमित्रत्वं करोतीत्यादिको नामप्रकृतिकस्य णेरर्थः। तत्र मुण्डादिपदस्य धर्म्मपरत्वात् मुण्डादिण्यन्तधात्वर्थतावच्छेदकीभूत फलवत्त्वाच्च नरादेः कर्म्मत्वमिति सम्प्रदायविदः। वासः पृथु मृदु भृशं वा करोतीत्यर्थे वासः प्रथयति म्रदयति भ्रशयति इत्यादावृतो

देवादेशः। तथा चैनं परिम्रढ़यति इत्यत्रापि। [illegible]
करोतीत्यर्थे यङेव नतु णिः तेन गात्रं कण्डूयति कण्डूयते वा इत्यत्र
गात्रस्य कण्डुं करोतीत्यर्थः जित्त्वादुभयपदम् एवं स्वर्गलोके महीं
वसतिस्थानं करोतीत्यर्थे स्वर्गलोके महीयते ङानुबन्धेषु पाठादात्मने-
पदं शब्दादिभ्यः करोतीत्यर्थे क्यङेवेत्युक्तम्। सत्यवति वचनमतीत्यादौ
गृह्णातीत्यादिरर्थः सत्यापयति अर्थापयति वेदापयति इत्यत्र च
सत्यं वक्तीत्यादिरर्थः सत्यादिभिः आदावागमश्च प्रियं स्थिरं वा
वक्तीत्यर्थे प्रापयति स्थापयति इत्यादौ प्रियस्थिरादेः प्रस्थाद्यादेशो-
ऽपि अश्वतरं वदतीत्यर्थे अश्वयति इत्यत्र तरप्रत्ययलोपश्च गोमन्त-
माचष्टे इत्यर्थे गवयति गुणवन्तमाचष्टे इत्यर्थे गुणयति स्रग्विणमा-
चष्टे इत्यर्थे स्रजयति इत्यादौ तु मतुवतुविनां लुगपि तथा कर्त्तार-
माचष्टे इत्यर्थे कारयतीत्यत्र तृचः अन्तिकमाचष्टे इत्यर्थे नेदयति
बाढमाचष्टे इत्यर्थे साधयति इत्यत्र चान्तिकबाढयोर्नेदसाधौ च
युवानमल्पं वा वदतीत्यर्थे कनयति युवाल्पयोः कनित्यनुशिष्टेः एवं
यवयति अल्पयति इत्यपि। स्थूलमाचष्टे दूरमाचष्टे इत्याद्यर्थे स्थूल
दूरयुवह्रस्वक्षिप्रक्षुद्राणामन्तस्थादिलोपो गुणश्चेत्यनुशिष्टेः क्रमेण स्थवयति
दवयति यवयति क्षपयति क्षोदयति इत्येव प्रयोगः। बहुमाचष्टे
इत्यर्थे भूययति बहोर्भूयादेशः। हस्ताद्यङ्गेभ्यस्तन्निरस्यतीत्यर्थेऽपि
णिः तेन हस्तं निरस्यतीत्याद्यर्थे हस्तयते पादयते इत्यादि पूर्ववदा-
त्मनेपदम्। तूस्ताद्विघाते संक्रादे वस्त्रात्पुच्छादितस्तथा। उत्क्षेपादौ
कर्म्मणो णिस्तत्तदर्थपूर्व्वक इति भागुरिस्मृतेः तूस्तं विनिहन्तीत्यर्थे
वितूस्तयति तूस्तं केशजटा वस्त्रं संछादयतीत्यर्थे संवस्त्रयति पुच्छ-
मुत्क्षिपतीत्यर्थे उत्पुच्छयते गौः एवं परिपुच्छयते भाण्डानि समि-
नोतीत्यर्थे सम्भाण्डयते भिक्षुः चीवरं समार्ज्जयतीत्यर्थे सञ्चीवरयते।
कर्म्मकर्त्तुरेतत्सूत्रेण विनिहन्तीत्याद्यर्थे न णिः तूस्तयति प्रतूस्तयति

एव गृहं तिष्ठासतीत्यादिको न प्रयोगः स्थितेर्गृहकर्म्मकत्वाभावात्
अन्यथा गृहधर्म्मिकां स्थितिप्रकारकेच्छां बोधयद्द्वयमेव प्रमाणं स्यात्
ननु गृहे तिष्ठासतीत्यादिरिति प्राहुः । चिकीर्षादेः प्रकृत्यादिरूपेष्ट
साधनत्वेन तद्बोधकेच्छासत्त्वेऽपीच्छार्थकसनन्तात् न सम्प्रत्ययः तत्र
न्याय्य सनिष्यते इत्यनुशिष्टेरतश्चिकीर्षितवतीत्यादिको न प्रयोगः ।
पापच्यते इत्यादौ यङः पौनःपुन्यमर्थः तच्च प्रकृतधात्वर्थजातीय
क्रियोत्तरत्वाद्यक्रियानन्तर्य्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति तेन
पाकोत्तरपाकानन्तर्य्यवत्पाककर्त्ता इत्येवं तत्र वाक्यार्थः । किं
पक्तरि पुनः पक्तृत्वेऽपि न निरन्तरं पुनः पुनः पक्तृत्वम् अतो न तत्र
पापच्यते इति प्रयोगः पाकोत्तरत्वादिकञ्च तत्समानकर्तृत्वगर्भं बोध्यम्
अतः पुरुषान्तरीयपाकाद्युत्तरत्वमादाय नातिप्रसङ्गः । तण्डुलं पाप-
च्यते इत्यादौ यङन्तधातुपर्य्याप्ते सर्व्वत्रैव पाकादौ तण्डुलकर्म्मत्व-
स्यान्वयो व्युत्पत्तिवैचित्र्यात् नातः क्रमेण मुद्गमाषौ एकां तण्डुलस्य
पक्तरि तथाविधप्रयोगः सुखेन पापच्यते इत्यादौ कारकान्तरमप्ये-
तेन व्याख्यातं जंगम्यते चंक्रम्यते इत्यादौ धात्वर्थगतं पौनःपुन्यमिव
कौटिल्यमपि यङोऽर्थः गत्यर्थात् कौटिल्य एव तद्विधानात् तेन पुनः
पुनः कुटिलगतिमान् इत्येवं तत्र बोधः शेषं पूर्व्ववत् । लोलुप्यते
पोपूय्यते जंजप्यते दंदश्यते जेगिल्यते इत्यादौ निन्दितत्वमपि तेन
पुनः पुनर्गर्हितं लुम्पति चरतीत्यादिकस्तदर्थः । अत्रोत्सर्गत एव
एकाचो हलादेरेव धातोर्यङ्विधानात् पुनः पुनः कथयति जागर्त्ति
दरिद्रातीत्याद्यर्थे कथ्यादेर्न यङ्नापि पुनः पुनरेति यजते इत्यादा-
विन प्रभृतेः सूप्रभृतिभ्यश्चेति विशेषविधेस्तु पुनः पुनरियर्त्ति अत्राति
अटतीत्याद्यर्थे अरार्य्यते अशाश्यते अटाट्यते इत्यादिकः प्रयोगः
शुभिरुचिभ्यां तु न स्यात् पुनः पुनः शोभते रोचते इत्यर्थे शोशु-
भ्यते इत्यादेर्निराकाङ्क्षत्वादिति वदन्ति ।

तद्धितं लक्षयति।

विभक्त्यादिभिन्नाद् यः प्रत्ययस्तद्धितं मतम्।
नामप्रकृतिकोऽनेवमतिव्याप्त्यादिदोषतः।

विभक्तिधात्वंशप्रत्ययोऽन्यः प्रत्ययस्तद्धितं तत्तकरत्यादौ स्वा-
र्थिकः कादिरपि तद्धितमेव तदन्यत्वेनापि प्रत्ययं विशेषयन्नन्ये
नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणं विभक्तौ समासे चाति
व्याप्तेः पचतितरामित्यादौ तरामाद्यव्याप्तेश्च।

विभजते।

तस्यापत्यं तद्विशेषस्तद्वंश्यो युतेन्दुमान्।
कालस्तथा तेन रक्तं तस्य कूपोऽथ वेत्ति तत्।
अधीते वा देवतास्य सैषमादीन् यथायथम्।
बोधयद्विविधानर्थांस्तद्धितं स्यादनेकधा।

तस्यापत्यस्य विशेषो गुर्वायस्तत्प्रथमत्वादिः।

अपत्यार्थं व्याकुरुते।

अण् नाम्नोऽपत्यसामान्ये षष्ठ्यन्ताद्बाधकं विना।
अदन्तादिञ् निषादादेरन्यायोऽक् चेष्यपेक्षितम्।

षष्ठ्यन्तान्नाम्नः साक्षात्परम्परासाधारणापत्यसामान्ये बोध्ये अण्
इत्युत्सर्गः स च मरीचेरपत्यं मारीचः काश्यपिरित्यादौ अपत्यवि-
शेषभाने तु तद्धितभेदो वक्ष्यते मरीचिना अपत्यमित्यर्थे तु न षष्ठ्य
न्तं नाम। अस्याबाधकमाह अदन्तादिति अदन्तान्नाम्नो बाधकं विना
इञेव दक्षस्यापत्यं दाक्षिः अस्यापत्यमिः इत्यादौ तथापि निषादादे-
रिञा अपत्यबोधने तदन्तिमायोऽमादेशोऽपेक्षितः यथा नैषादकिः
वैयासकिः चाण्डालकिरित्यादौ।

इञोऽपवादमाह।

शिवादिभ्यस्त्वणेव स्यात् स्त्रीगर्भादेर्मताऽन्यथा।
कुञ्जादेरायनञ् ञ्यश्च तस्मान्नैव स्त्रियामिति।

श्रिवर्ववंशककुत्स्थपुत्रप्रभृतिभ्योऽणेव नतदन्तादिञ् मुनिषु वसि-ष्ठादिरुषिषु वसुदेवादिः कुरुषु नकुलादिश्च शिवादौ पाठः तेन वासिष्ठो वासुदेवः साहदेवः नाकुलइत्यादिरेव तत्र प्रयोगः ... नाकुलिरित्यादौ क्वचिदपवादविषयेऽप्युत्सर्गविधिः प्रथमापत्यं वा तदर्थः । गर्गस्यापत्यमित्यर्थे गर्गादिगणात् यञ् यथा गार्ग्यः वात्स्यः पाराशर्यः कार्तवीर्यः जामदग्न्यः इत्यादौ अत्र गर्गादिष्वन्ते गर्गोनाम कश्चित् तस्यापत्यमित्यर्थे गार्गिरित्येव एवमग्रेऽपि । कु-ञ्जादेर्गणादपत्यसामान्ये आयनञ् तदुत्तरं ञ्यश्चास्त्रियां यथा कौञ्जा-यन्यः ब्राध्नायन्यः इत्यादौ स्त्रियान्तु कौञ्जायनीत्येव नतु ततोञ्यः सुमङ्गलादित्वात् ङीप् । अत्रास्त्रियामित्यबहुत्वस्याप्युपलक्षणं तेन कौञ्जायनाः पुमांसइत्यत्रापि न ञ्यः । गार्गिः कौञ्जिरित्यादौ गापत्यत्वेन बोधः किन्तु प्रथमापत्यत्वेनेति वक्ष्यते ।

अदन्ताच्छिल्पिनोण्वा सेनान्ताल्लक्षणादपि ।

नडादेर्गायनेनित्यं बाह्वादेस्त्विञ् विधीयते ।

तन्तुवायस्तन्तुवायिः कौम्भकार्यः कौम्भकारिरित्यादौ शिल्पि-वाचकात् महासैन्यो महासेनिरित्यादौ च सेनान्तात् लाक्षण्यो लाक्ष-णिरित्यादौ लक्षणशब्दादिञि प्राप्ते विभाषया ण्यः तथा नडादे र्गायनेनित्यं तेन नाडायनः चारायणइत्यादा कुञ्जाद्यन्तर्गतोनडादिः बाह्वादेस्त्विञ् यथा बाहोरपत्यं बाहविः सुमित्राप्रभृतयस्तु बाह्वादि गणे द्रष्टव्याः ।

अथोऽपवादान्तरमाह ।

स्त्रीप्रत्ययान्तादश्वादेरप्येयञ् परिभाषिकात् ।

न नदीमानुषीनाम्न आदावादृद्धिवर्जितात् ।

विनतायाः सौपर्ण्याः कामदुघ्वाः युवत्या वाऽपत्यमित्यर्थे वैनतेयः सौपर्णेयः कामदुघेयः यौवतेयइत्यादौ स्त्रीप्रत्ययान्तादेयैव नतञ्

अश्वेरपत्यमित्यर्थे आश्वेयः अभिपदमप्रत्ययेदन्तादिस्वरनास्ति यादि-
आदिकं तेन श्रैणेयः द्वारेयः आग्नेयइत्यादिकः प्रयोगः। विद्या-
दिकं विस्वरमपि नाप्रत्ययेदन्तं नदीत्यादिकमप्रत्ययेदन्तमपि न वि-
स्वरमतोवैधेयमारीचइत्यादौ न प्रसक्तः स्त्रीप्रत्ययान्तादप्यारादाद्विर्व-
र्ज्जितात् नदीमानुषीनाम्नोनैवम् यथा यामुनः सैम्यः साररवतः
इत्यादौ यथा वा सौभद्रः कौशल्यइत्यादौ आदावादृद्धिमतस्तु
तादृग्नाम्नो यथाप्राप्तमेयस्रेव यथा आङ्गेयः द्रौपदेयः कौशेय
इत्यादौ।

तथा।

सुभगादेरिनादेशोऽप्यन्तस्यैयणि नित्यशः।
कुलटायाविकल्पेन सती यदि भवत्यसौ।

सुभगाप्रभृतेरेयण्यन्तस्वरस्य नित्यमिनादेशोयथा सुभगाया
अपत्यमित्यर्थे सौभागिनेयः दौर्भागिनेयः पारस्त्रैणेय इत्यादौ सौभा
र्दवदिहोभयपदस्य वृद्धिः। सुभगा दुर्भगा चैव परस्त्री बन्धकी
तथा। मध्यमा च कनिष्ठा चेत्यादिकः सुभगागणः। कुलटा तु यदि
सती तदा तदन्तस्वरस्यैयणि विभाषया इनादेशो यथा कौलटिनेयः
कौलटेयइत्यादौ यदि त्वसती तदा कौलटेयइत्येव प्रयोगः।

तथा।

प्रोत्तेनाङ्गेन वा हीनात् स्त्रियामादादितस्तु वा।
एरक् स्याच्चटकायास्तु नित्यमेरक् स्त्रियान्तु लुक्।

प्रोत्तेन हीनानां दास्यादीनाम् अङ्गेन हीनानां काणादीनाञ्च
स्त्रीप्रत्ययान्तानामेरक् वा स्यात् यथा दास्याअपत्यं दासेयः दासेरः
यथावा काणाया अपत्यं काणेयः काणेरः कुलटाप्यङ्गहीना चेत् कौल-
टेरइति चटकाया अपत्यमित्यर्थे नित्यमेरक् नत्वेयक्षपि यथा चाट-
केरः चटकस्त्र्यपत्ये तु तस्य लुक् तेन चटकेत्येव तत्र प्रयोगः।

तथा ।

तिकादेरायनिञ् नित्यं तदादेस्तु विभाषया ।

ईयः स्वसुः स च व्यद्भ्रातुर्य्यः श्वशुराद्भवेत् ।

तिकस्यापत्यमित्यर्थे नित्यमायनिञ् यथा तैकायनिः कौशल्यायनिरित्यादौ कौशल्यायनिवल्लभामिति भट्टिः । स च तदादेः सर्व्वनाम्नो वैकल्पिकः यथा तस्यापत्यमित्याद्यर्थे तादायनिः तादः यादायनिः यादइत्यादौ स्वसुरपत्यमित्यर्थे स्वस्रीयः भ्रातुरपत्यमित्यर्थे भ्रात्रीयः भ्रातृव्यः द्वेष्टरि तु भ्रातृव्यशब्दो रूढ़एव तदुक्तं भ्रातृव्यौ भ्रातृजद्विषाविति श्वशुरस्यापत्यमित्यर्थे यः श्वशुर्य्यः ।

तथा ।

कुलाद्य यकखीनः सपूर्व्वात् केवलादपि ।

महाकुलादञीनञ् च दुष्कुलादेयणोविधिः ।

कुलस्यापत्यमित्यर्थे यः एयकञ् च स्यात् यथा कुल्यः कौलेयकः सपूर्व्वात् केवलाच्च कुलादीनः स्यात् यथा आढ्यकुलीनः कुलीन इत्यादौ महाकुलादञ् ईनञ् च स्यात् यथा माहाकुलः माहाकुलीनः दुष्कुलादेयण् यथा दौष्कुलेयः । केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् । इमां महाकुलीनस्य तस्य लिप्सामहे वयमिति भट्टिः । कथं महाकुलीनो दुष्कुलीनः सपूर्व्वादीन् महदादेः कुलीनेनान्वयइत्यन्ये ।

देशक्षत्रिययोरूढ़ादाद्यपत्येऽप्यणोविधिः ।

नदेः कुरोः कोशलाच्च ण्यस्तथेदन्ततोप्यसौ ।

देशे क्षत्रिये च शक्तायास्मोराजन्यपत्यार्थे अणोविधिः यथा पञ्चालानां राज्ञापत्यं वा इत्यर्थे पाञ्चालः एवं वैदेहः एवं ऐक्ष्वाकः । क्वचिदणादावप्युवर्णस्य लोपः नकारादेरुक्तरूढ़ात् कुरुतः कोशलाच्च तादृशार्थे ण्यएव यथा नैषध्यः कौरव्यः, कौशल्यः इत्यादौ । कथं

हिरण्मयं हंसमबोधि नैषधः परिदेविरे कुरवो[illegible] इति यदि तस्येदमित्यण्। इदन्तादप्युक्तरूढात् ण्यः [illegible] आवन्त्यः इत्यादौ. कथं कौन्तेयः कुन्तीशब्दात् स्त्रीप्रत्ययान्तात् ढगेव। स्त्रियान्तु कुन्त्यवन्तिकुरुभ्योऽस्य लुगेव यथा कुन्तीनां स्त्र्यपत्यमित्यर्थे कुन्ती एवमवन्ती कुरुः। कम्बोजादेरपि रूढादपत्ये राजनि च विहितस्याणो लुगेव यथा कम्बोजानामपत्यं राजा वा इत्यर्थे काम्बोजश्चोलः केरल इत्यादौ।

संख्यासंभद्रपूर्व्वाया उरण्मातुः स्त्रियाञ्च ङीप्।
गार्ग्यो ण्यस्तु यमादित्यादितिभ्यः स्याद्दितेरपि।

द्वयोर्म्मात्रोरपत्यमित्यर्थे द्वैमातुरः षैमातुरः षाण्मातुरः शक्तिधरः कुमार इत्यमरः साम्मातुरः भाद्रमातुरः स्त्रियान्तु तदन्तात् ङीप् द्वैमातुरीत्यादि गोरपत्यमित्यर्थे य एव गार्ग्यो वत्सः। एवं यमस्यापत्यं याम्यः आदित्यस्यापत्यमादित्यः अदितेरपत्यमित्यर्थे आदित्यः दितेरपत्यं दैत्य इत्यादौ ण्य एव कथमादितेयः दैतेयः अदितिदितिभ्यां स्त्रीप्रत्ययान्तत्वाड्ढेयण्।

अपत्यम्।

नापत्यप्रत्ययान्तात् स्यादपत्यप्रत्ययः पुनः।
गुर्व्वाद्यन्ते त्वपत्ये स्यात् पुनर्यूनीति तद्विधेः।

उपगोरपत्यस्यापत्यमित्यर्थे औपगवादिपदेभ्यो नापत्यप्रत्ययः अत एव एको गोत्रे इति पाणिनिरप्याह एकः केवलोऽपत्यप्रत्ययं विना कृत एव शब्दो गोत्रेऽपत्यसामान्ये विहितप्रत्ययस्य साकाङ्क्ष इति तदर्थः पुनर्यूनीति विश्रान्तरसत्त्वादेव औपगवस्य गुर्व्वाद्यन्तापत्यमित्यर्थे औपगविः गार्ग्यायण इत्यादौ पुनरपत्यप्रत्ययः गुर्व्वाद्यन्तं यत् प्रथमं तदपत्यं युवोच्यते इति वृद्धाः।

[illegible]न्तादायनञ् स्यात् कौञ्जायन्यादिवर्त्मनात् ।
गुर्व्वा[illegible] केवलाच्च द्रोणादेश्च विभाषया ।

यञन्तादिञन्ताच्च गुर्व्वायत्तापत्यस्य बोधने आयनञ् स्यात् यथा गार्ग्यस्य गुर्व्वायत्तापत्यमित्यर्थे, गार्ग्यायणः वात्स्यायनः दाक्षायणः इत्यादौ । यञन्तादपि कुञ्जादिगणपाठात् तेन तत्र कौञ्जायन्योऽय- मित्यादिरेव प्रयोगः । केवलादपत्यप्रत्ययशून्यादपि द्रोणादेरायनञ् यथा द्रोणस्य प्रथमापत्यं द्रौणायनोऽश्वत्थामा विभाषयेत्युक्तेः पक्षे द्रौणिरित्येव ।

गर्गादेरपि कुञ्जादेः प्रथमापत्यबोधने ।
यञेव स्यान्न तु ञ्यः स्यान्नायनञ् स्यादिति स्थितिः ।

गर्गस्य प्रथमापत्यमित्यर्थे गार्ग्यो वात्स्य इत्यादौ न ञ्यः कि- न्तु यञेव तथा कुञ्जस्य प्रथमापत्यमित्यर्थे कौञ्ज्यो गौञ्ज्य इत्यादावपि नायनञ् ।

अपत्यविशेषः ।

तद्युक्तेन्दुमत्काले तस्मादणादयो विधिः ।
नक्षत्रद्वन्द्वतश्छीयः कथितार्थे विधीयते ।

पुष्येण सहेन्दुमदित्यर्थे पौषं दिनं पौषी रात्रिः एवमाश्विनं श्रावणं कार्त्तिकमित्यादौ । तद्युक्तेन्दुमत्काल इत्येव नातः पुष्येण सहेन्दुमत् पुरमित्यर्थे पौषं पुरमित्यादिकप्रयोगः । नक्षत्रद्वन्द्वात् कथितार्थे छीयोऽबाधक ईय एव यथा पुष्यपुनर्व्वसुभ्यां सहेन्दुमद्दिनं पुष्यपुनर्व्वसवीयम् एवमश्विनीभरणीया रात्रिरित्यादिप्रयोगः ।

नक्षत्रेण युक्तेन्दुमत् ।

तस्मात् युक्तमित्यर्थे तस्मादण् स्यादिकण् पुनः ।
लाक्षातो रोचनातश्च शकलात् कर्द्दमात्तु वा ।

हरिद्रया रागयुक्तमित्यर्थेऽण् यथा हारिद्रं वासः एवं कौसुम्भं लाक्षया रक्तमित्यर्थे नित्यमिकण् यथा लाक्षिकं रोचनिकं शाकल

कर्दमाभ्यां तेन रक्तमित्यर्थे विभाषयेकञ् यथा लाक्षिकः लाक्षः कार्दमिकः कार्दमः इत्यादौ ।

तथा ।

नीलादनः कस्तथा पीतात् लिङ्गिकादपि नित्यशः ।
स्वभावरक्ते गौण्या तु वृत्त्या तद्धितमुच्यते ।

नीलेन नील्या वा रक्तमित्यर्थे नित्यमनप्रत्ययो यथा नीलः पट इत्यादौ पीतेन पीतया वा रक्तमित्यर्थे तु नित्यं कप्रत्ययो यथा पीतकः पट इत्यादौ हारिद्रः कुक्कुटपादः लाक्षिकमधरं पीतकं वस्त्र मित्यादौ स्वभावसिद्धपीतादौ गौणवृत्त्या हरिद्राद्यैरक्तसदृशे तद्धितं प्रयुज्यते । तेन रक्तम् ।

तेषां समूह इत्यर्थेऽप्यञ् पाशादेस्तु यः स्त्रियाम् ।
गर्गादिगोत्रादुक्षादेस्त्वाकस्तीर्थकु वाश्वतः ।

काकानां समूहः काकम् एवं शुकानां शौकं भिक्षाणां भैक्षं युवतीनां समूह इत्यर्थे यौवतमिति जयादित्यः । तद्धितार्थप्रत्ययपरे पुंवद्भावात् यौवनमिति तु भागवृत्तिः अतएव यमुपास्ते मुग्धभावं कलाकुशलयौवनम् । सरसं नित्यमाक्रम्य सफलं तस्य यौवनमिति तन्मते प्रयोगः । पाशानां समूह इत्याद्यर्थे तु तेभ्यो य एव तदन्तश्च स्त्रीलिङ्ग एव यथा पाश्या धूल्या वात्या वन्या शस्त्येति खलरथादि पाशादौ पठन्ति यथा खल्या रथ्या इति । तथा गर्गादिगोत्रेभ्य समूहेऽकञ् गार्गकं दाक्षकमित्यादौ उक्षणां समूह इत्यर्थेऽप्यसे यथा औक्षकम् औष्ट्रकमित्यादौ । उक्षोष्ट्रोरभ्रवत्साजा राजा राजन्यकास्तथा । राजपुत्रो मनुष्यश्च वृद्धउक्षादिको गणः । अश्वानां समूहे त्वीयो विभाषया यथा आश्वीयमाश्वमिति ।

धेनोरनञः कञ् नित्यं केदाराद्यस्त्रिकास्तकञ् ।
पिष्टात् कवचिहस्तिभ्यास्त्वेकञ् केशादिकञ्यवौ ।

वेणूनां समूहो वैणुकम् अधेनोराधेनवमित्यत्रैव अचमादेशवर्जनादि निषेधात् सामूहिकप्रत्ययेषु तदन्तविधिरेष्टव्यः तेन सुन्दरगर्गाणां समूह इत्यर्थे सौन्दरगार्गकमित्यादि साध्विति शाब्दिकाः । केदाराणां समूह इत्यर्थे यञि कैदार्य्यम् इकणि कैदारिकम् अकञि कैदारकम् इति त्रिधा प्रयोगः । चित्तार्थकात् कवचितो हस्तितश्चैकञ् यथा पूपानां समूहः पौपिकं शाष्कुलिकं तथा कवचिनां समूहः कावचिकं हस्तिनां हस्तिनीनां वा समूहो हास्तिकम् । केशानां समूहे ठिकञ् यञ् च कैशिकं कैश्यम् ।

इनिः खलोलूकपद्मादरथात् कट्यः स्त्रियामिमौ ।
गणिकातो ब्राह्मणाच्च मानवाद्वाडवाच्च यत् ।

खलादिभ्य इनिः समूहे यथा खलिनी उलूकिनी पद्मिनी । तथा रथात् कट्यः यथा रथकट्येति इमौ च प्रत्ययौ स्त्रियामेव । गणिकादिभ्यस्तु समूहे यत् यथा गाणिक्यं ब्राह्मण्यं मानव्यं वाडव्यमिति ।

गजबन्धुजनग्रामसहायेभ्यस्तु तः स्त्रियाम् ।
पृष्ठाद्यत् क्लीबलिङ्गं तत् चरणेभ्यस्तु धर्म्मवत् ।

गजता बन्धुता जनता सहायता इत्यत्र गजादीनां समूहेऽर्थे तप्रत्ययः स च स्त्रीलिङ्ग एव । पृष्ठात् समूहे यत् यथा पृष्ठ्यं तच्च क्लीबलिङ्गमेव अतएवास्य पाशादिष्वनन्तर्भावः चरणेभ्यस्तु समूहे धर्म्मइव प्रत्ययाः स्युः यथा कठानां धर्म्मः काठकं तथा समूहोऽपि एवं छान्दोग्यमाथर्व्वणमित्यादि ।

तत्समूहः ।

तद्वेत्ति तदधीते चेत्यर्थेऽण्यत्र क्रतुवाचिनः ।
सूत्रान्तादप्यकल्पादेरुक्थादेश्चेकणो विधिः ।

निमित्तं वेत्तीत्यर्थे नैमित्तः एवमौत्पातः मौहूर्त्तः छन्दो वेत्त्यधीते

वेत्त्यर्थे छान्दसः वैयाकरणः क्रतुवाचिनोऽग्निष्टोमादेष्ठिकण् तथा अग्निष्टोमं वेत्ति अधीते वा आग्निष्टोमिकः ब्राह्मणादेः सूत्रान्तशब्दादप्युक्तार्थे इकण् यथा वार्त्तिकसूत्रिकः सांख्यसूत्रिकः कल्पादेस्तु सूत्रात् कल्पसूत्रइत्यणेव। उक्थं वेत्त्यधीते वा इत्यर्थेऽप्यौक्थिकः नैयायिकः पातञ्जलिकः लोकायतं बौद्धशास्त्रं तद्वेत्त्यधीते वा लौका-यतिकइत्यादि।

विद्यान्तादङ्गधर्म्मक्षत्त्रानुत्तरवर्त्तिनः।
तथेकण् शतषष्टिभ्यां परस्य तु पथष्टिकः।

वायसविद्यां वेत्त्यधीते वा वायसविद्यिकः सर्पविद्यिकः चौर विद्यिकः। अङ्गाद्यनुत्तरवर्त्तिनः किम् आङ्गविद्यः ज्योतिर्व्विद्यः गान्धर्व्वविद्यः धार्म्मविद्यः क्षात्त्रविद्यः अत्र त्रयी वा विद्या त्रिविद्या तां वेत्त्य धीते वा त्रैविद्यइति कर्म्मधारयादण्। त्रैविद्या मां सोमपाः पूतपापा इति गीता। तिस्रो विद्या वेत्तीत्याद्यर्थे तु द्विगुतस्तद्धितस्य लुकि त्रिविद्यइत्येवम्। शतपथं षष्टिपथं वेत्तीत्याद्यर्थे टिकः शतपथिकः षष्टिपथिकः स्त्रियान्तु शतपथिकीत्यादि।

क्रमादिभ्यः कएव स्यात् पदात् कः स्यादिकस्तथा।
सर्व्वादेरथ साद्यादेर्वेत्तीत्याद्यर्थकस्य लुक्।

क्रमं वेत्तीत्याद्यर्थे क्रमादिभ्यः कएव यथा क्रमकः सामकः शि-क्षकः मीमांसक इत्यादौ। पदात्तु कः स्यादिकोऽपि यथा पदकः पदिकः। सर्व्वादेः साद्यादेश्च शब्दाद्विहितस्य वेत्त्यधीते वेत्यर्थकस्य तद्धितस्य लुगेव यथा सर्व्वं वेदं वेत्तीत्याद्यर्थे विहितस्याण्प्रभृतेः सर्व्ववेदः सर्व्वतन्त्रइत्यादौ सादिवार्त्तिकइत्यादौ चेति।

अष्टाध्यायादितः कः स्यादध्यायस्य च लुक् तथा।
अध्यायसंख्यार्थकशब्दादेश्चाद्यर्थस्य लुक् परे।

अष्टावध्याया यस्य तदष्टाध्यायसूत्रं तद्वेत्त्यधीते वेत्यर्थे कः अष्टाध

परस्य च लुक् यथाङ्गाः पाणिनीयाः पाञ्चाः गौतमीयाः दाक्षाः वासुदेवीयाः काशकृत्स्नाः जैमिनीयाः परे पुनरत्रावध्यायसंज्ञा यस्य इत्यर्थे अप्रत्ययं कृत्वा तदेव्याद्यर्थकस्य तद्धितस्य लोपमाहुः।

तद्वेत्त्यधीते वा।

तस्येदमिति सम्बन्धिन्यपि तस्मादयोविधिः।

स्वराजपरदेवेभ्यः कादिरीयोजनादपि॥

तस्येदमित्येवं तत्सम्बन्धिन्यर्थे तदर्थकादण् इत्युत्सर्गः। यथा दृषदस्येदं वाक्यं सर्वं दार्षदमित्यादि। स्वस्येदमित्याद्यर्थे तु स्वराजादिभ्यः कादिरीयो यथा स्वकीयं राजकीयं परकीयं देवकीयं जनकीयमिति। स्वः आत्मा इत्यतः अतएव स्वीयं यदन्यभिन्नं पदमिति मणिदीधितिरिति वदन्ति।

ईयस्त्यदादेर्भवतस्तत्र तादृक्कस्मपि।

परावरादितोऽप्यर्द्धात् यदिकस्मपि दिक्परात्।

त्यस्येदमित्याद्यर्थे त्यदादिगणादीयः यथा त्यदीयं तदीयं मदीयं इदमीयमित्यादि। भवतस्तु त्यदादेरीये परतः तस्य दादेशोऽपि यथा भवदीयं नये स्वरे तद्धितइति पदान्तविधेर्निषेधादस्य विधिः। अणन्तस्य तु भवतस्तस्येदमित्यर्थे भावतमित्यस्मेव। परावुत्तरवर्त्ति-नोऽर्द्धादपि न केवलाच्च तस्मात् परार्द्धस्येदमित्यर्थे यथैव। यथा परार्द्ध्यं अवरार्द्ध्यं अर्द्ध्यं आदिपदात् उत्तरार्द्ध्यं अधमार्द्ध्यं दिग्वाचिपूर्वकात् पुनरर्द्धात् यदिकस्मपि यथा पूर्वार्द्ध्यं पौर्वार्द्धिकं दक्षिणार्द्ध्यं दाक्षिणार्द्धिकमित्यादि।

युष्माकास्माकभावान्ते वाखीनञ् युष्मदस्मदोः।

तवेत्यस्माच्चमेत्यस्मादखीनस्मपि कादिमः।

युवयोर्युष्माकं वा इदं आवयोरस्माकं वा इदमित्यर्थे युष्मदस्मदोर्युष्माकास्माकभावोत्तरमखीनञ् च वा स्यात् यथा यौष्माकं यौष्माकीणम्

पाञ्चालकमाञ्चालीयम्। पाञ्चालदन्तिसान्निध्यवासनीभूतभूरयः।
पक्षे त्यदादित्वादीयो यथा युष्मदीयमस्मदीयमिति। तवेदं ममेदमि-
त्यर्थे तवकममेत्यनयोरखीनञपि कादिकः स्यात् यथा तावकं तावकीनं
बहुपनिर्देशान्न त्यदादेश्च। अपिना त्यदादित्वादीयोऽपि यथा
त्वदीयं मदीयमिति।

कञरण्याद्धस्तिवर्त्मविहाराध्यायमानुषे।
णित्यं वा गोमयेऽन्यत्र णः सदा स्यादिति स्थितिः।

अरण्यस्यायं हस्तीत्याद्यर्थे अरण्यान्नित्यं कञ् यथा आर-
ण्यकः करी पन्था विहारो मानुषश्च अध्यायश्चारण्यगीतत्वादार-
ण्यकः। गोमये त्वरण्यस्येदमित्यर्थे आरण्यकमारण्यं वा गोमयमिति
द्विधा प्रयोगः। कथितेभ्योऽन्यस्मिन्नर्थेऽरण्यान्नित्यं णप्रत्यय एव
यथा अरण्यस्येयमित्यर्थे आरण्या लता आरण्यः पशुरित्यादि।

तस्येदम्।

यञ् तत्र भवइत्यर्थे पदादुत्सर्गतो भवेत्।
ग्रीवात एयञ् वा तत्र ग्रैवं ग्रैवेयमित्यपि।
भवइत्यस्य उत्पत्तिवर्त्तमानत्वे ह्यर्थौ यथायथम्।
आदेर्मध्यान्ताग्रार्थे मोऽधसः सस्य लुक् तथा।
डिमोऽग्रपश्चादन्तेभ्यः कालार्थात्तु पदादिकञ्।

आदौ भवः आदिमः भवो वर्त्तमानइति वर्द्धमानवृत्तिः। मणि-
र्विराजते तस्मिन् तवायं हारमध्यमः। अधोभवइत्यर्थेऽधसः, सलोपा
दधमः। यदङ्गमधमं तस्य स्पर्शनं दुरितावहमिति स्मृतेः। अग्रे
भव इत्यर्थे डिमः अग्रिमः एवं पश्चिमः अन्तिमः कालार्थकात्मासादि
शब्दात्तु तत्र भवइत्यर्थे इकञ् यथा मासिकं सांवत्सरिकं मौहूर्त्तिकं
पौर्वाह्णिकं आपराह्णिकमित्यादि।

*शरदः आर्त्तवायं वा तु रोगे तथातपे।

निशायाश्च प्रदोषाच्च वार्थं तादिस्तथा श्वसः ।

ठञमित्यण्प्रत्ययः तदर्थे शरच्छब्दात् श्राद्धस्य चाकाङ्क्षः यथा शारदिकं श्राद्धम् । अन्यत्र शारदश्चन्द्रमाः । रोगातपयोस्त्वर्थयो-रयं वैकल्पिकः यथा शारदः शारदिकोऽज्वरः आतपश्च । निशायां प्रदोषे वा भवइत्यर्थे नैशिकं नैशं वा प्रादोषिकं प्रादोषं वा तम इत्यादि । श्वसः श्वःपदात्तु तादिरयमिकण्प्रत्ययस्तथा विकल्पे-नेत्यर्थः तेन श्वोभवमित्यर्थे शौवस्तिकं धनम् । शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टिः । पक्षे श्वस्त्यं श्वस्तन-मिति [illegible] वक्ष्यते ।

सन्ध्यादेश्चर्तुनक्षत्रभेदाच्चाञ् फले पुनः ।
संवत्सरात् पर्व्वणि च प्रावृषश्चेण्यमीरितम् ।

सन्ध्यादिगणात्तथा भवमित्यर्थे अञेव यथा सान्ध्यं सन्धिवेलं आमावस्यं त्रयोदशं चातुर्दशं पाञ्चदशं पौर्णमासं प्रातिपदं वा तमः इति अत्र ऋतुभेदो ग्रीष्मादिः तस्मात्तत्र भवमित्यर्थे ग्रैष्मं शैशिरं तदन्तविधिना पूर्व्वग्रैष्मम् अवयवादृतूनामित्युत्तरस्य वृद्धिः । नक्षत्र-भेदात्तु पुष्ये भवं पौषं आषाढं तैषं रौहिणमित्यादि । संवत्सरात्तु फले पर्व्वणि च भवार्थेऽञेव यथा सांवत्सरं फलं पर्व्व वा अन्यत्र तु कालार्थत्वादिकञ् यथा सांवत्सरिकं कर्म्म प्रावृषि भवइत्यर्थे एण्यः यथा प्रावृषेण्यं तृणम् । प्रावृषेण्यं पयोवाहमिति रघुकाव्यम् ।

वर्षातः ठ्यादिकञ् हेमन्तादप्यत्र वा तलुक् ।
सायं चिरं प्रगे प्राह्णे कालार्थाव्ययतस्तनट् ।

वर्षासु भवं वार्षिकं तृणम् । हेमन्ताद्भवार्थे अण्ठञ् तथा अत्रापि परत्वात् तकारस्य वा लुक् तेन हैमन्तिकं हैमनं हैमन्त-मिति त्रिविधप्रयोगः । तदन्तविधिना पूर्व्वहैमनमित्यादिरपि प्रयोगः । सायमादिभ्यस्तु सायन्तनं चिरन्तनं प्रगेतनं प्राह्णेतनं

दिवातनं दोषातनमित्यादौ भवार्थे तनट् ट्यनुबन्धत्वात् सायन्तनी तिथिः।

प्रगतश्च परारेश्च चिरात्त्नो विभाषया।
पुराशब्दात्तथा नोवा मध्याह्नादेश्च वा तनट्।

प्रगत्नं परारित्नं चिरत्नं पक्षे प्रगेतनं परारितनं चिरतनं पुराशब्दादपि भवार्थे वा नः तेन पुराणं पुरातनमिति।

तदापन्नात्तु कालात् स्यादिकण् ङीप् वा स्त्रियां ततः।
मनुष्ये पर्व्वतादीयस्तीयोऽन्यत्र विभाषया।

तत्काले भवमित्यर्थे तत्कालशब्दादिकण् तात्कालिको बोधः एवमापत्कालिकः तदन्तस्य स्त्रियां वा ङीप् यथा तात्कालिकी तात्कालिका मतिरित्यादौ। पर्व्वते भवो मनुष्य इत्यर्थे पर्व्वतादीयण् पार्व्वतीयो नरः ततोऽन्यत्र तु पर्व्वतीयं पार्व्वतं वा फलमित्यादावपि।

दिगादिभ्यो यदेव स्याच्छरीरावयवादपि।
दृतिवस्त्यस्थिकुक्षिभ्य एयञ् स्यात् कलसाद्ढः।

दिक्षु भवमित्यर्थे दिश्यम् एवमाद्यम् वर्ग्यं रहस्यं दिश्यं उदर्यं यूथ्यं वंश्यं दण्ड्यमित्यादौ यत्। शरीरावयवादपि यथा दन्ते भवमित्यर्थे दन्त्यम् एवं कण्ठ्यम् ओष्ठ्यं मूर्द्धन्यं मुख्यं जठर्यम् इत्यादौ। दृतौ भवमित्याद्यर्थे तु दृत्यादेरेयञेव यथा दार्त्तेयं वास्तेयं आस्थेयं कौक्षेयम्। असिं कौक्षेयमुद्यम्य चकारापनसं मुखमिति भट्टिः। कालसेयम् कालशेयमिति।

चतुर्म्मासादयश्चैते यस्त्वव्ययीभावतस्तथा।
अन्तःपूर्व्वादिकस्त्वेवं समानात्तत्परादपि।

चतुर्म्मासेषु भवमित्यर्थे चातुर्म्मास्यं व्रतं चतुःपदस्याषाढादिचतुष्कत्वेन स्वार्थकत्वान्नाथ द्विगुरतः पञ्चकपालवदित्यत्रेव द्विगोर्विहितस्य न लुक्। यज्ञे तु चातुर्म्मास्यो यागः इत्यस्यैव अन्तः-

पूर्व्वादव्ययीभावाद्भवार्थेष्ठकञ् यथा आन्तर्दैशिकम् आन्तर्गेहिकम्।
अव्ययीभावादित्येव तेनान्तःकरणे भवमान्तःकरणं दुःखमित्यत्रैव
समानात्तत्पराच्च यथा समाने भवं सामानिकम्। सामानिकोऽयं
युवयोः प्रयासः। समानदैशिकम्।

काद्यन्तवर्गादीयः स्याज्जिह्वामूलाङ्गुलादपि।
भिन्नाद्युत्तरतो वर्गात् यदीनावीय एव च।

कवर्गे भवः कवर्गीयो वर्णः इतीयः। एवञ्चवर्गीयः टवर्गीयः
इत्यादि। जिह्वामूलादङ्गुलाच्च जिह्वामूलीयः अङ्गुलीयः। भिन्ना-
द्युत्तरवर्गात् तु प्रत्ययत्रिकं यथा भिन्नवर्गे भवइत्यर्थे भिन्नवर्ग्यः
भिन्नवर्गीणः भिन्नवर्गीयः इत्यादि।

स्त्रीपुंभ्यां नञ्स्नञौ तत्र भवे भावे तु वा तयोः।
स्वरादौ तद्धिते प्राप्ते गोर्यदेव विधीयते।

स्त्रियां भवः स्त्रैणः। स्त्रैणेन नीता विकृतिं लघिम्ना इति भट्टिः।
पुंसि भवः पौंस्नः। स्त्रियाः पुंसश्च भावेऽर्थे तु नञ् स्नञौ विक-
ल्पेन स्याताम्। तेन स्त्रियाभावः स्त्रैणं स्त्रीत्वञ्च पुंसोभावः पौंस्नं
पुंस्त्वञ्च। गोपदात्तु यद्यदर्थे स्वरादिस्तद्धितः प्रसक्तः तत्तदर्थे तदेव
साकाङ्क्षं तेन गोरपत्यं गौर्देवता यस्य गवा चरति गोः समूह इत्याद्यर्थे
गव्यमित्येव प्रयोगः। गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः।

तत्रभवः।

ये भवार्थे यतः प्रोक्तास्तद्धितप्रत्ययाः पुरा।
जातेऽर्थेऽपि ततस्ते स्युर्विशेषविधिना विना।

मथुरायां भवः इत्यर्थे इव मथुरायां जातइत्यर्थेऽप्यणोऽति-
देशः। एवं स्त्रैणः पौंस्नः ग्राम्यः ग्रामीणः इत्यादौ नञादेरपि
प्राप्तेश्च एवञ्चप्रामाविकः प्रदोषादेरिकञादिप्राप्तौ च वौदिर्विशेष
विधेर्व्वक्ष्यते।

प्रावृषस्तु जातेऽर्थे स्यादिकः शरदस्त्वकञ् ।
संज्ञायां विहितः पूर्वाह्णापराह्णादितस्तु कः ।

प्रावृषि जातमित्यर्थे प्रावृषिकं पत्रं प्रावृषिका वृष्टिः । शरदि जातमित्यर्थे तु संज्ञायामिकञ् यथा शारदिकाः मुद्गप्रभेदाः शारदमन्नम् । पूर्वाह्णे जातमित्यर्थे तु पूर्वाह्णादिभ्यः को यथा पूर्वाह्णकं अपराह्णकं मध्याह्नकमित्यादि । एवमार्द्रायां मूलायां जातमित्यर्थे आर्द्रकं मूलकं के समासस्येति ह्रस्वः ।

अणकः स्यादमावास्याशब्दात्तद्धितादपि ।
स्थानान्ताच्च गोशालखरशालाच्च नित्यशः ।
जातार्थकस्य लुग्वा तु वत्सशालादितो भवेत् ।

अमावास्यायां जातइत्यर्थेऽण् अकश्च स्यात् यथा आमावास्यः अमावास्यको बालकः । तद्धितादमावास्याशब्दादपि यथाच आमावास्यः अमावास्यकः । स्थानान्तादितस्तु जातार्थकतद्धितस्य नित्यं लुक् स्यात् यथा गोस्थाने जातमित्यर्थे गोस्थानं पत्रम् एवमश्वस्थानं ग्रामस्थानमित्यादौ गोशालायां जातमित्यर्थे गोशालं खरशालं इत्याप्येवम् । नित्यममीषां क्लीवत्वं एभ्यो जातार्थस्य नित्यं लुग्विधानात् अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते । अतएव मघासोऽश्वो न लुम्भवेत् इत्यत्र निषेधः सङ्गच्छते इति निबन्धकारः । वत्सशालादितस्तु जातार्थस्य वा लुक् यथा वत्सशालायां जातइत्यर्थे वत्सशालो वात्सशालश्च वृषः । एवमभिजित् आभिजितो वा बालकः । वत्सशालाभिजिदश्वा रेवती रोहिणी तथा । अश्वयुक् मृगशीर्षश्च वत्सशालादिको मतः । मृगशिरसि भवं जातं वा इत्यर्थे तु न तद्धितमनभिधानात् ।

अनुराधा तिष्यपुष्यौ हस्तस्वाती पुनर्वसू ।
विशाखा बहुलैतेभ्यो नित्यं जातार्थकस्य लुक् ।

अनुराधायां जातोऽनुराधः स्त्रीप्रत्ययस्य लुक् तद्धितलुकीति लुक् एवं तिष्यः पुष्यः हस्तः स्वातिः पुनर्वसुः विशाखो बहुलः कथं बाहुलेयः कारकजिदिति बहुला कृत्तिका तत्र जातइति संज्ञायामेवम् ।

श्रविष्ठाषाढयोरीयम् उञ् वा शतभिषक् यदात् ।

इति महामहोपाध्यायश्रीजगदीशतर्कालङ्कारभट्टाचार्य्यविरचिता शब्दशक्तिप्रकाशिका समाप्ता ।

---




अशुद्धिशोधनम् ।

२५ पृष्ठे ११ पंक्तौ "वाक्यार्थं इत्येव" इत्यत्र "वाक्यार्थं विषया भासते इत्येव" इति पठनीयम् ।